# जगद्गुरुश्रीभावानन्दाचार्यकृतं

## भावनात्रयम्

नत्वा रामं च श्रीरामानन्दं भाष्यकृतं गुरुम्।
हितावहं मुमुक्षूणां करोमि भावनात्रयम्।।1।।

निजं कारागृहे बद्धं पतितं च महार्णवे।
भुजङ्गविषमूढं च मुमुक्षुर्भावयेत् सदा।।2।।

तत्र कारागृहं देहस्तथा देहानुबन्धिनः।
सम्बन्धिश्च विज्ञेया भार्यापुत्रादयः खलु।।3।।

तत्रस्था अवगन्तव्या अहन्ताममतादयः।
आवरणं तथा चाशाऽविवेको निगड़ो मतः।।4।।

दशेन्द्रियाणि बोध्यानि तत्रस्था अधिकारिणः।
आलम्बनं मनो ज्ञेयं बद्धोऽहं स्वेन कर्मणा।।5।।

मोचको मम तस्माद्धि श्रीरामःसकलेश्वरः।
मुमुक्षुर्भावयेदेवं काराबद्धं निजं सदा।।6।।

इति जगद्गुरुश्रीभावान्दाचार्यकृते भावनात्रये काराबद्धभावनात्मकः
प्रथमःपरिच्छेदः।।1।।

आशामहाम्बुभिः पूर्णः संसारश्च महार्णवः।
वायुक्षोभो मतस्तत्र विकारो मानसश्च हि।।1।।

रागः खलु महावर्त्तो यादांसि ममतादयः।
परम्परा बोध्यास्तत्र चाध्यात्मिकादयः।।2।।

तनुर्भग्नः प्लवो वेद्यो भारास्तद्रक्षणादयः।
महार्णवे तस्मिन् पतितः स्वेन कर्मणा।।3।।

तारको मम तस्माद्धि श्रीरामःसकलेश्वरः।
क्षुर्भावयेदेवं महाब्धौ पतितं निजम्।।4।।

इति जगद्गुरुश्रीभावानन्दाचार्यकृते भावनात्रये महार्णवपतितभावनात्मको द्वितीयः

उपकारस्मृतिः कार्या रामस्य सकलेशतुः।
अमोघा संस्तुतिः कार्या रामस्य परमात्मनः।।16।।
श्रीरामे च तदीयेषु निष्ठा कार्या मुमुक्षुभिः।
उपेक्षा नैव कर्त्तव्या कस्यचित् प्राणिनः खलु।।17।।
श्रीरामज्ञानशून्याश्च दोषशून्या विभाव्यताम्।
रामवृत्तं च संश्राव्य कार्यस्तेषां समादरः।।18।।
निष्ठा भागवती ज्ञेया श्रीरामस्य प्रसादतः।
प्रायश्चित्तादिना नैव सन्निष्ठा जायते खलु।।19।।
निषादगृद्धवृत्तं हि प्रमाणं तत्र विद्यते।
वैष्णवानां मुमुक्षूणामेते चार्था अपेक्षिताः।।20।।
श्रीमत्सुरसुरानन्दाचार्येण निर्मिता शुभा।
वैष्णवदिनचर्येयं भूयात् कल्याणकारिणी।।21।।

*
**

इष्वासेन तथेषुणा रघुपतेर्बाहू वरं चाङ्कितौ गात्रं द्वादशसूर्ध्वपुण्ड्रलसितं वृन्दा गले शोभिता।
सीतारामपदाब्जदास्यपरकं यस्याभिधानं तथा श्रीमत्तारकदीक्षितः स पुरुषः पूज्यः सतां वैष्णवः।।1।।
हृद्ये यद्हृदयाम्बुजे हि सदये सीतापति राजते भूतानां हितचिन्तको गुरुरतो साध्वर्चको धर्मवान्।
सन्निष्ठो हरिवासरादिनिरतः श्रीरामसङ्कीर्त्तको रामाराधनतत्परः स पुरुषः पूज्यः सतां वैष्णवः।।2।।

–जगद्गुरुश्रीटीलाचार्य